THE

# BHÂMINIVILÂSA

OF

JAGANNÂTH PANDIT

WITH

The Commentary (Praṇayaprakâs'a)

OF

**ACHCHYUTARÂYA MODAK.**

EDITED

BY

KÂSHÎNÂTH PÂṆDURANG PARAB

AND

MANGESH RÂMKṚISHṆA TELANG.

---

**PRINTED AND PUBLISHED**

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JAVAJI DADAJI'S "NIRNAYA-SAGAR" PRESS.

Bombay:

1894.

*Price 1 Rupee.*

पण्डितराजश्रीजगन्नाथविरचितो

# भामिनीविलासः ।

अच्युतरायकृतया प्रणयप्रकाशाख्यया व्याख्यया समेतः ।

काशीनाथ पाण्डुरङ्ग परब

मङ्गेश रामकृष्ण तेलङ्ग

इत्येताभ्यां संस्कृतः ।



स च

शाके १८१६ वत्सरे

**मुम्बय्यां**

निर्णयसागराधिपतिना मुद्रयित्वा प्राकाश्यं नीतः ।

मूल्यमेको रूप्यकः ।

चास्मान्वञ्चयित्वा गतस्तस्येदं
तदेतत्कालावच्छेदेनास्मिंल्लोके
दिगन्त इति । मदेति ।
तास्तथा । कस्तूरीक
न्निन्ध्यजीविनः शतशो
स्येति यावत् । तत
न्योऽनेकराजान
स्पदं यथा स्य
संभोगार्हा भ
श्रीकृष्णमन
नितात्वेना
विहार इ
अत्र
नुप्र
प

॥ श्रीः ॥

# ण्डितराजश्रीजगन्नाथविरचितो

# भामिनीविलासः ।

यकृतया प्रणयप्रकाशाख्यया व्याख्यया समेतः ।

## अन्योक्त्युल्लासः ।

प्रेम्णा प्रेक्ष्य प्राञ्चोः प्रपदानि प्रेयसीप्रिययोः ।
प्रचुरं प्रपञ्चयामि प्रौढ्यै प्रणयप्रकाशमहम् ॥
नहि भामिनीविलासः सुखसाध्यो भवति रसविलोलधियाम् ।
प्रणयप्रकाशविरहे तस्मात्तेनैव तैः स संपाद्यः ॥

इह श्रीमत्परमेश्वरशिरःकिरीटहीरकहारीभूतसमुल्लसत्तरङ्गां सकलोपनिषदन्तरङ्गां भगवतीं गङ्गामाराध्य तत्प्रसादसमासादितसकलविद्याकमलिनीविद्योतनत्वमहिम्ना श्रीमज्जगन्नाथनाम्ना पण्डितराजेन 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे ॥' इति भरतसूत्रात्, 'सुन्दरी स्वेशहृदयं वशीकृत्य स्वसद्गुणैः । लौकिकं वैदिकं चापि कूजतीष्टं ससाधनम् ॥ तद्वत्काव्याद्यपि श्रीमन्महारामायणादिकम् । श्रोतुर्मनो वशीकृत्य हितं वक्ति सहेतुकम् ॥' इत्यादि मदुक्तसाहित्यसारप्रपञ्चितपद्धत्या धर्मादिचतुर्विधससाधनपुरुषार्थानां भामिनीविलासाख्ययथार्थलघुकाव्यप्रणयनेनोपदिदिक्षया तन्निष्प्रत्यूहतादिप्रयोजनं शिष्टाचाराद्यनुमितश्रुतितः प्राप्तविधानं वस्तुनिर्देशलक्षणं मङ्गलं तावदन्योक्त्युल्लासेऽत्र तयैवाप्रस्तुतप्रशंसारूपया शिष्यानुशासनार्थं ग्रन्थारम्भेऽपि द्योत्यते—

**दिगन्ते श्रूयन्ते मदमलिनगण्डाः करटिनः**
**करिण्यः कारुण्यास्पदमसमशीलाः खलु मृगाः ।**
**इदानीं लोकेऽस्मिन्ननुपमशिखानां पुनरयं**
**नखानां पाण्डित्यं प्रकटयतु कस्मिन्मृगपतिः ॥ १ ॥**

दिगन्त इति । अयं बुद्धिस्थत्वेनापरोक्षो मृगपतिः, 'सिंहो मृगेन्द्रः' इत्यमरात्सिंहः, इदानीं वर्तमानकाले, न तु भविष्यत्कालेऽपि, अस्मिन्प्रत्यक्षे लोके भूर्लोके पुनरप्रथमे । एतेन पूर्वं शतशः करिवरा विदारिता एवेति ध्वनितम् । अनुपमशिखानामतितीक्ष्णाग्राणां नखानां पाण्डित्यं नैपुण्यं कस्मिन्प्रकटयतु । न क्वापि प्रकटयत्वित्यन्वयः । तत्र हेतुं पूर्वार्धे-

नाह—यतः, मदमलिनगण्डा दानदिग्धकपोलाः करटिनः ।
निन्द्यजीविनि । एकादशाहश्राद्धेऽपि दुर्दुरूढेऽपि वायसे ॥' इति ।
लमण्डिता गजा इत्यर्थः । दिगन्ते प्राच्यादिदिक्प्रान्ते श्रूयन्ते । 'ऐरा
कुमुदोऽञ्जनः । पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ॥' इत्य
श्रवणद्वारावगम्यन्ते, न त्वपरोक्षीक्रियन्त इत्यर्थः । तथा करिण्यो गजिन्य
तद्यूथनाथानां प्रागेवानेन विदारितत्वात्तासां स्त्रीत्वेन वधानर्हत्वाच तास्ता
मेवेति भावः । किंच मृगा हरिणा असमशीला अतुल्यबलाः खलु । तस्माद्
पतेः शौर्यप्रकटनस्थानाभाववर्णनमित्याशयः । इयं हि मुख्योक्त्या व्याख्या ॥ अ
स्वस्य कस्यचिदन्यस्य वा पण्डितमाण्डलिकचक्रवर्तिनः स्तुतिरियमिति पाण्डित
पत्योद्यते । वस्तुतस्तु तस्याः सर्वतोमुखत्वेन यथाप्रसङ्गं यथायोगं प्रकल्पनेऽपि न क्षतिः
व्यवस्था यावदग्रिमान्योक्तिष्वपीति दिक् ॥ मङ्गलपक्षे तु वस्तुनिर्देशलक्षणमङ्ग
श्लेषेणार्थत्रयं ज्ञेयम् । तद्यथा—मृगपतिः । अत्र अजहत्स्वार्थलक्षणया नृमृगपतिर्नृ
ग्राह्यः । तथा चेदं प्रह्लादस्य हिरण्यकशिपुवधोत्तरं ब्रह्मादीन्प्रति भगवत्प्रभाववर्णनवचन
हे ब्रह्मादयः, अयमपरोक्षो मृगपतिरुक्तरूपया नृहरिः । इदानीमित्याद्युत्तरार्धशेषं प्राग्वदेव
एवं करटिशब्देनाप्येतद्वध्यत्वेनासुरा एव ज्ञेयाः । ते तु दिगन्ते श्रूयन्ते । समुद्रपातालादि
निविष्टत्वाद्दूरतरवर्तमानत्वेन केवलमाकर्ण्यन्त एवेत्यर्थः । तद्वत्करिणीपदेनापि कयाधूप्रभृत
योऽसुरस्त्रियो बोध्याः । तथा मृगयन्त्यन्वेषयन्तीति व्युत्पत्त्या शुक्रपुत्रादयस्तन्मन्त्रिण ए
मृगशब्दिताः । तस्माद्भगवतो नारसिंहस्य पुनःशौर्यप्रकाशने न किमपि प्रकृते पात्रमिति
हिरण्यकशिपुवधादितच्चरितात्मकवस्तुव्यञ्जनेन विचित्रं तच्छौर्यैश्वर्यमिति द्योतितम् । तेन
तस्य कविकर्तृकनमस्क्रियात्मकमपि मङ्गलं ध्वन्यते । तस्यास्त्वत्तोऽहं निकृष्टो मत्तस्त्वमु-
त्कृष्ट इति भावनापूर्वककायिकादित्रिविधप्रह्वीभावैकरूपत्वात् ॥ पक्षे 'शमो दमस्तपः शौचं
क्षान्तिरार्जवमेव च । ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥' इति स्मृतेर्मृगयन्त्य-
न्वेषयन्ति सदसद्वस्तु विचारयन्ति ते मृगा ब्राह्मणास्तान्पाति त्रिःसप्तवारं क्षत्रक्षपणपूर्वकं
पृथ्वीप्रदानेन पालयतीति तथा । श्रीमत्परशुराम इत्यर्थः । नखानां न विद्यते खमाकाशपदवा-
च्यमवकाशजातं येषां ते तथा । वध्यराहित्येन निरवकाशानां शराणामित्यर्थः । ननु कुत
एवमिति चेत्तत्राह—दिगन्त इति पूर्वार्धेन । करटिन ऐरावताद्यष्टदिग्गजोपलक्षिता जह-
त्स्वार्थलक्षणया तत्स्वामिन इन्द्रादिलोकपाला इत्यर्थः । तेषां मदमलिनगण्डत्वं तु मदजन्य-
स्वेदादेव बोध्यम् । एवं करिण्यः करा राजग्राह्यनियतधनभागास्ते विद्यन्ते येषां नृपाणां
तेषां स्त्रिय इत्यर्थः । स्वनिहतराजरमण्य इति यावत् । तद्वन्मृगा निरुक्तव्युत्पत्त्या विचार-
शीला जनकादिक्षत्रिया इत्यर्थः । इदं हि श्रीमत्परशुरामविजयोत्तरं स्वगतमेव कश्यपादि-
सप्तर्षिवचनम् ॥ उक्तार्थमेवान्यत् ॥ पक्षे गोपीसान्त्वनार्थं भगवता प्रेषितमुद्धवं प्रति राधिकावा-
क्यमिदम् ॥ तथा हि । हे उद्धव, अयमस्मद्बुद्धिस्थत्वेन प्रत्यक्षः । एतेन प्रीत्यतिशयः सूचितः ।
मृगेति । मृगो हरिणस्तद्वत्पतिः । स यथा वन एव प्रायः क्रीडति तद्वदयं श्रीकृष्णो वृन्दा-
वन एवास्मद्भर्ता । न तु ग्रामादौ प्रसिद्धस्तथेत्यर्थः । अस्मज्जारः । श्रीकृष्ण इति यावत् ।

चास्मान्वञ्चयित्वा गतस्तस्येदं वक्ष्यमाणफलमित्याकूतम् । उत्तरार्धशेषस्तु यथाश्रुत एव । तदेतत्कालावच्छेदेनास्मिँल्लोके माद्दग्विलासास्पदं तस्य नास्त्येवेति भावः । तदेवोपपादयति—दिगन्त इति । मदेति । मदेन मृगमदेन मलिनाश्चित्रितत्वेन श्यामा गण्डाः कपोला यासां तास्तथा । कस्तूरीकलुषितकपोला इत्यर्थः । एतादृशाः करटिनः करटाः पूर्वोक्तविश्वा-न्निन्द्यजीविनः शतशोऽसुराः सन्ति यस्येति स तथा । अनेकदुष्टासुरचमूनायकस्य । भौमासुर-स्येति यावत् । तेन स्वगृहे रोधितत्वेन तत्संबन्धिन्यः करिण्यः करशब्दितबलिग्रहणशालि-न्योऽनेकराजानां षोडशसहस्रसंख्याकाः कन्यका इत्यर्थः । तास्तु निरुक्तरोधनवशात्कारुण्या-स्पदं यथा स्यात्तथा दिगन्ते क्वचिद्दिक्प्रान्ते श्रूयन्त इति यावत् । तस्मात्ता अपि न सद्यः संभोगार्हा भवन्तीति भावः । तथा मृगा मृगयन्ति राधादिगोप्युपभोग्यत्वकीर्तिश्रवणेन श्रीकृष्णमन्वेषयन्तीति मृगाः । कुब्जादिमथुरानार्य इत्यर्थः । तास्त्वसमशीलाः सामान्यव-नितात्वेनातुल्यस्वभावाः खलु । तस्मात्तासु तु पुरुषोत्तमस्य भगवतः कदाप्यनुचित एव विहार इति रहस्यम् । एवं च युक्तमेवास्यास्मान्वञ्चयतः संभोगस्थलराहित्यमधुनेति तत्त्वम् ॥ अत्र प्रथमतृतीयचतुर्थार्थेषु युद्धवीरः, तथा द्वितीये पाण्डित्यवीरः, पञ्चमे विप्रलम्भशृङ्गारा-नुप्राणितः सौन्दर्यवीरश्च रसः । अर्थचतुष्टयेऽपि धीरोदात्तो नायकः । पञ्चमे तु कितवः । परकीयाः प्रगल्भाः सौन्दर्यगर्विता विप्रलब्धा नायिकाः । अप्रस्तुतप्रशंसा श्लेषः काव्य-लिङ्गं परिकरः । परिकराङ्कुरः संकरश्चालंकाराः । एतेषां लक्षणानि तु सोदाहरणमुक्तानि कुवलयानन्दकारिकासु—'अप्रस्तुतप्रशंसा स्यात्सा यत्र प्रस्तुताश्रया । एकः कृती शकुन्तेषु योऽन्यं शक्रान्न याचते ॥ नानार्थसंश्रयः श्लेषो वर्ण्यावर्ण्योभयात्मकः । सर्वदोमाधवः पा-यात्स यो गङ्गामदीधरत् ॥ अब्जेन त्वन्मुखं तुल्यं हरिणाहितसक्तिना । उच्चरद्भूरि कीलालः शुशुभे वाहिनीपतिः ॥ समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम् । जितोऽसि मन्द कंदर्प मच्चित्तेऽस्ति त्रिलोचनः ॥ अलंकारः परिकरः साभिप्राये विशेषणे । सुधांशुकलितोत्तंस-स्तापं हरतु नः शिवः ॥ साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः । चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः ॥' इति । संकरलक्षणं तूक्तं कुवलयानन्द एव—'नीरक्षीरन्यायेनास्फुटभेदा-लंकारमेलने संकरः' इति । एवं रसादिलक्षणान्यपि मदीयसाहित्यसारतो ज्ञेयानि । विस्तर-भयात्तानि नेह प्रपञ्च्यन्ते । अत्र यद्यपि अन्योक्त्याद्युक्तरसापेक्षयाप्रस्तुतप्रशंसाद्यलंकार-स्यैवाधिकचमत्कारकारित्वेन प्राधान्यादस्यार्थचित्राख्यमध्यमकाव्यत्वेऽपि निरुक्तालंकारापे-क्षयापि तद्व्यञ्जितयुद्धवीरस्यैवाधिक्येनाह्लादजनकत्वाद्ध्वनिसंज्ञकोत्तमोत्तमकाव्यत्वमेव ज्ञेयम् । अयं काव्यभेदस्तु रसगङ्गाधराख्यैतद्ग्रन्थ एव प्रसिद्धः । तदिहान्योक्त्याख्यप्रथमोल्लासे नीत्यु-पदेशात्ससाधनयोर्धर्मार्थयोः प्रतिबोधनम् । नीतिमत एव धर्मार्थयोः संभवात् । द्वितीये शृङ्गारोल्लासे तु स्वकीयाया नायिकायाः संवर्णनेन 'धर्माविरुद्धो भूतेषु कामोऽस्मि भरत-र्षभ' इति स्मृतेस्तादृशस्य तस्योपपादनम् । अवशिष्टोल्लासद्वये तु ससाधनस्य मोक्ष-स्यैव प्रबोधनमिति । न च वेदेनैव धर्माद्यखिलपुमर्थोपदेशस्य ससाधनं विस्तरतः कृतत्वा-त्किमनेन पौरुषकाव्येनेति चेत्सत्यम् । तस्यार्थित्वादिविशेषणविशिष्टाधिकारिविषयत्वात् । यथाहुः—'अर्थी समर्थो विद्वाञ्शास्त्रेणापर्युदस्तो यजेत याजयेत्' इति । उपलक्षणमिदं

सामान्यतो यावद्वेदार्थग्रहणतदनुष्ठानादेः । तस्माद्ये तावद्वेदाद्यर्थश्रवणादितः प्रभुसंमितोपदेशत्वादिना समुद्विजन्ति तथा पुरुषार्थमप्यभिवाञ्छन्त्येतादृग्विषयिजनैकविषयत्वादस्य काव्यादेर्नैव नैरर्थ्यशङ्कापीति ध्येयम् । एवं चात्र विषयित्वे सति पुमर्थेच्छवोऽधिकारिणः । व्यञ्जनया पुमर्थचतुष्टयबोधनं विषयः । तत्प्राप्त्यानर्थनिवृत्तिः प्रयोजनम् । व्यङ्ग्यव्यञ्जकभावः संबन्धश्च सिद्धः । अत्र शिखरिणीवृत्तम्—'रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी' इति वृत्तरत्नाकरोक्तेरिति शिवम् ॥

एवमलौकिकपाण्डित्येऽपि पुरुषेण तावद्गर्वः स्वप्नेऽपि नैव कर्तव्यः । किंतु 'श्रुतं प्रज्ञानुगं यस्य यस्य प्रज्ञा श्रुतानुगा । असंभिन्नार्थमर्यादः पण्डिताख्यां लभेत सः ॥' इति महाभारतोक्तपाण्डित्यरीतिमतैव भाव्यम्, नो चेद्दुर्वारदुःखापत्तिः स्यात् । गर्वोपादकख्यातिलाभपूजादिप्रयोजनस्य पाण्डित्यस्य 'क्षयान्ता निचयाः सर्वे पतनान्ताः समुच्छ्रयाः । संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ॥' इति वचनात्तत्साध्योपभोगानां नश्वरत्वात्तथा प्रतिक्षणमनुभवाच्च । अत एवाहुः—'वेदाभ्यासात्पुरा तापत्रयमात्राच्च शोकिता । पश्चादभ्यासविस्मारभङ्गगर्वैश्च शोकिता ॥' इति । तस्मात्पाण्डित्याभिमानो नैव विधेय इति तात्पर्यं राजहंसान्योक्त्या द्योतयति—

**पुरा सरसि मानसे विकचसारसालिस्खल-**
**त्परागसुरभीकृते पयसि यस्य यातं वयः ।**
**स पल्वलजलेऽधुना मिलदनेकभेकाकुले**
**मरालकुलनायकः कथय रे कथं वर्तताम् ॥ २ ॥**

पुरेति । इयं हि सार्वभौमाश्रितोऽप्ययं सूरीश्वरस्तद्विरहाद्यतो निराश्रयस्ततोऽद्य क्षुद्रशूद्राद्याश्रयेण तिष्ठत्विति धनयौवनाद्युन्मादेन वदन्तं कंचित्प्रति कस्यचिदभिज्ञस्योक्तिः । रे इति नीचसंबोधने । यस्य पुरा प्राङ् मानसे मानसाह्वये सरसि सरोवरे । विकचेति । विकचानि प्रफुल्लानि यानि सारसानि, 'सारसं सरसीरुहम्' इत्यमरात्कमलानि, तेषामालिः पङ्क्तिस्तस्याः सकाशात्स्खलन्तश्च्यवन्तो ये परागाः पुष्परेणवस्तैः सुरभि सुगन्धि यथा संपेदे तथा कृतं तस्मिन्नित्यर्थः । एतादृशे पयसि जले यस्य वयो यातम् । तारुण्यमतिक्रान्तमिति यावत् । ननु सारसानामालिः पङ्क्तिरिति त्वयोक्तम् । सा च संयोगविशेष एव । एकतान-निकटसंयोगस्यैव तादृशकिंचिद्विरलसामानाधिकरण्यद्वारकसंयुक्तसंयोगस्य वा 'भुक्ता पङ्क्तिर्विप्रपङ्क्तिः' इत्यादौ तच्छक्यताया दृष्टत्वात् । तस्य च गुणत्वात्परागरूपद्रव्यस्य ततः स्खलनवर्णनमनुचितमेवेति चेन्न । आद्ये 'वर्षत्यम्बुदमालेयम्' इत्यादिवत्, द्वितीये 'द्विजपङ्क्तिर्भुङ्क्ते' इत्यादिवच्च संबन्धविशेषकल्पनया निरूढलक्षणया वोपपत्तेः । एतेन 'चकोरीगणे' (१।३) इत्यादि व्याख्यातम् । एवं चैतादृशस्यापि पण्डितवरस्य पाण्डित्याभिमानेन संपादितभोगक्षये जाते नीचाश्रयोऽप्यधुनानेन कार्य इति पामरेणापि बोध्यते खण्ड्यते चेतरेण । तदथापि भोगाभावस्तु नैव हृत इति धिक्पाण्डित्याभिमानमित्याशयः । सः । मरालेति । मराला

हंसाः । अत्र मरालपदस्य हंसे शक्तिग्रहस्तावन्मानसादिसिद्धपदसांनिध्यादेव । तदुक्तम्—'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्यव्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः ॥' इति मदीये साहित्यसारेऽपि । 'रौत्याम्रे पिकः' इत्यादौ प्रसिद्धपदसंनिधेरिति । तेषां कुलं वंशस्तस्य नायकः । तत्र वा नायको धुरीण इत्यर्थः । मिलदिति । मिलन्तः समुच्चयीभवन्तो येऽनेके भेका बहवो मण्डूकास्तैराकुलं व्याप्तं तत्रेति यावत् । एतादृशे । पल्वलेति । 'वेशन्तः पल्वलं चाल्पसरो वापी तु दीर्घिका' इत्यमरात्क्षुद्रसरोवारिणीत्यर्थः । अधुनाद्य कथं वर्ततां कथं निवसतामिति कथयेत्यन्वयः । तस्मादत्रैतद्वर्तनमनुचितमेवेति भावः । अन्योक्तिस्तूक्तैव । अत्रोदात्तो नायकः । करुणो रसः । अप्रस्तुतप्रशंसालंकारस्तु प्रायो यावदुल्लाससमाप्ति साधारण एव । इह काव्यलिङ्गमपि । पृथ्वीवृत्तम् । तदुक्तम्—'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः' इति ॥

एवं निजैश्वर्यमदेन कस्यापि प्रभावापह्नवेन केषांचिदप्याशोच्छेदो नैव कर्तव्य इति विधात्रन्योक्त्या ध्वनयति—

**तृष्णालोलविलोचने कलयति प्राचीं चकोरीगणे**
**मौनं मुञ्चति किं च कैरवकुले कामे धनुर्धुन्वति ।**
**माने मानवतीजनस्य सपदि प्रस्थातुकामेऽधुना**
**धातः किं नु विधौ विधातुमुचितो धाराधराडम्बरः ॥ ३ ॥**

तृष्णेति । इयं कंचिदपूर्वगुणगणैः सर्वजनसंतोषणनिपुणस्यापि नवाभ्युदयमुपगच्छतो निजदुर्गुणाभासैः परिभावकं प्रति कस्यचिद्गुणज्ञशिरोमणेरुक्तिः । हे धातः अयि चतुरानन । तृष्णालोलेति । तृष्णया पिपासया लोलानि चपलानि विलोचनानि नेत्राणि यस्य तस्मिन् । एतादृशे चकोरीगणे, न तु चकोरकुले । एतेन करुणायोग्यत्वं व्यज्यते । प्राचीं पूर्वदिशम् । तत्रैव चन्द्रस्योदितत्वसंभवात् । कलयति पश्यति सतीत्यर्थः । किं चेति समुच्चये । तथेति यावत् । कैरवेति । 'सिते कुमुदकैरवे' इत्यमरात्कुमुदवृन्द इत्यर्थः । मौनं मुकुलीभावं मुञ्चति । त्यजति सतीत्यर्थः । विकसति सतीति यावत् । एवं कामे मदने धनुर्मल्ल्यादि पौष्पं चापं धुन्वति भ्रमरविरुतलक्षणटणत्कारेण कम्पयति सतीत्यर्थः । न केवलमेतावदेव तिर्यङ्मात्रोपकरणम्, अपि तु मनुष्योपकारित्वमपि भूरितरं तत्रेति द्योतयति—मान इति । मानवतीति । रूपाद्यभिनिवेशशालिसुन्दरीवृन्दस्येत्यर्थः । माने निरुक्तगर्वे । न चात्र मानपदार्थपौनरुक्त्यम् । मानवतीत्यत्र मानं पद्मिन्यादिलक्षणप्रतिपादकं शास्त्रं प्रमाणं विद्यते यासु विषये तास्तथेति व्युत्पत्तेर्विवक्षितत्वात्तासामेव रूपाद्यभिमानस्य दुरुत्सार्यत्वात्तत्संकरजातीनां तु तादृग्रूपवत्त्वासंभवेन यौवनैकमहिम्ना कदाचित्तत्सत्त्वेऽपि तस्य सुनिरस्यत्वाच्चेति ध्येयम् । माने निरुक्तगर्वे सपदि तत्कालं प्रस्थातुकामे गन्तुकामे सतीति यावत् । न तु गते तदैतत्सत्त्वेऽप्यक्षतेः । चन्द्रोदये सत्येतच्चतुष्टयं तावत्स्पष्टमेव स्वभावाद्भवतीति । तस्मादधुनोक्तरीत्या । सर्वलोकाभ्युदयसमय इदानीमित्यर्थः । त्वयेत्यार्थिकम् । धारेति । जलदपटलाटोप इत्यर्थः ।

'आडम्बरः समारम्भे' इति विश्वः । तत्रापि विधौ चन्द्रे, न तु नभःप्रदेशविशेषे । विधातुं कर्तुमुचितो युक्तः किं नु । अपि तु नैव योग्य इति योजना । तदभ्रेण शुभ्रच्छव्याच्छादनं भवता नैव भावनीयमिति भावः ॥ यद्वा गोकुले भगवता हेतुवादैरैन्द्रयागे भग्ने प्रवर्तिते च गोवर्धनाराधने क्रुद्धेन वृद्धश्रवसा प्रारब्धेऽतिवृष्टिविवर्धने तत्रत्यानां व्रज्ञाणां प्रतीयं मघवन्मौढ्यध्वननधुरीणा वाणी । तद्यथा—हे धातः । चकोरीति । चकोरवच्छ्रीकृष्णचरणनखचन्द्रैकजीविनां गोपानां स्त्रीसमूह इत्यर्थः । प्राचीं पुराकृतभगवत्संघटनां कांचिद्दूतीमित्यर्थः । 'कैः अवकुले' इति छेदः । फलोद्गमे स्वनाशकत्वात्तुच्छकुले । वंश इत्यर्थः । कैः सुखरूपैर्ध्वनिभिः । विधौ 'विधुः शशाङ्के कर्पूरे हृषीकेशेऽपि' इति विश्वाच्छ्रीकृष्ण इत्यर्थः । इन्द्रेणेति शेषः । शिष्टं तु प्राग्वदेव । इह ललितो नायकः । चरणत्रये शृङ्गारश्चरमे करुणश्च रसः । श्लेषोऽप्यलंकारः । शार्दूलविक्रीडितं वृत्तम् । तदुक्तम्—'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' इति ॥

ननु सत्यमेव यदुपदिष्टं निरुक्तान्योक्त्या स्ववैभवमदात्कस्यापि गुणापलापेन केषांचिदपि तदेकोपजीविनां जीवातुविनाशो नैव विधेय इति, तथाप्येते मदनुयायिनस्तावन्मां प्रति प्रतिदिनम् । 'अन्यदा भूषणं पुंसः क्षमा लज्जेव योषितः । पराक्रमः परिभवे वैयात्यं सुरतेष्विव ॥' इति । 'पादाहतं यदुत्थाय मूर्धानमधिरोहति । स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः ॥' इति । 'असंपादयतः कंचिदर्थं जातिक्रियागुणैः । यदृच्छाशब्दवत्पुंसः संज्ञायै जन्म केवलम् ॥' इति । 'तुङ्गत्वमितरत्नाद्रौ नेदं सिन्धावगाधता । अलङ्घनीयताहेतुरुभयं तन्मनस्विनि ॥' इति । 'तुल्येऽपराधे स्वर्भानुर्भानुमन्तं चिरेण यत् । हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम् ॥' इति । 'अङ्काधिरोपितमृगश्चन्द्रमा मृगलाञ्छनः । केसरीनिष्ठुरक्षिप्तमृगयूथो मृगाधिपः ॥' इति च बहुतरमाघकाव्यादिसंमतिपूर्वकं स्वाभ्युदयार्थं परापकारमेव कर्तव्यतयोपदिशन्तीत्याशङ्किनं प्रति तत्रत्य एव कश्चित्तटस्थो मध्यस्थ इव सकलगुणज्ञतया प्राक्तनोपदेष्टैव कमलान्योक्त्या श्रद्धाविधानं व्यनक्ति—

**अयि दलदरविन्द स्पन्दमानं मरन्दं**
**तव किमपि लिहन्तो मञ्जु गुञ्जन्तु भृङ्गाः ।**
**दिशिदिशि निरपेक्षस्तावकीनं विवृण्व-**
**न्परिमलमयमन्यो बान्धवो गन्धवाहः ॥ ४ ॥**

अयीति । इदं हि कोमलामन्त्रणे संबोधनम् । तेन वक्तरि शिक्षकत्वेऽपि कारुण्यं व्यज्यते । दलदिति । भोः । विकसितकमलेत्यर्थः । एतेन मरन्दे स्पन्दमानतायां हेतुः सूचितः । भृङ्गा भ्रमराः, न तु हंसाः । तेन क्षुद्रत्वादि द्योत्यते । तव त्वत्संबन्धिनमित्यर्थः । एवं च भृङ्गेष्वर्थमात्रलोलत्वं ध्वन्यते । स्पन्दमानं किंचित्स्रवमाणम् । तेन मयि भूयः संपद्यते ततो भक्षयन्तु नाम ये केचन यथेच्छमित्यौदासीन्यव्युदासः । मरन्दं मकरन्दम् । किमपि कथंचिदपि । एतेन

स्वामित्वाभावः सूचितः । लिहन्तः आस्वादयन्तः सन्त इत्यर्थः । एवं च यावदर्थमेवैते मधुरं भाषन्ते तदूर्ध्वं तु स्वप्नेऽप्येतेनैव गोचरीभविष्यन्तीत्यनुचितपात्रत्वं तेषु व्यज्यते । मञ्जु मनोज्ञम् । 'मञ्जु मञ्जुलम्' इत्यमरः । क्रियाविशेषणमिदम् । मनोहरं यथा स्यात्तथा गुञ्जन्तु गुञ्जारवाख्यकर्णजापं कुर्वन्त्वित्यर्थः । एतेनातिनीचत्वं तेषु ध्वन्यते । उक्तं हि महाभारते—'सुलभाः पुरुषा लोके सततं प्रियवादिनः । अप्रियस्य च पथ्यस्य वक्ता श्रोतापि दुर्लभः ॥' इति । न च सर्वेऽप्येवमेवेति पूर्वपद्याशयोपदेष्टुरस्य तथात्वाभावादित्याह—दिशिदिशीत्युत्तरार्धेन दशदिशास्वपीत्यर्थः । एतेनाचिन्त्यशक्तिः सूचिता । तावकीनं त्वत्संबन्धिनं परिमलं सुगन्धं विवृण्वन्विशदयन् । 'वितन्वन्' इति पाठे विस्तारयन्नित्यर्थः । किं लोभेन नेत्याह— निरपेक्ष इति । एतादृशोऽयं प्रत्यक्षो गन्धवाहः पवनाख्यो बान्धवः सखा अन्य एव अलौकिक एवास्तीति संबन्धः । तस्मादेतदादरणमेव करणीयमिति तात्पर्यम् । अत्रोदात्तो नायकः । शान्तो रसः । भेदकातिशयोक्तिरप्यलंकारः । मालिनी वृत्तम् । तदुक्तम्—'ननमयययुतेयं मालिनी भोगिलोकैः' इति ॥

एवं जीवनैकनिर्वाहार्थं कंचिदुपागतमर्थिनं नैवावजानीयादिति कुटजान्योक्त्या द्योतयति समुपागतवतीत्यार्यावृत्तविशेषेण—

**समुपागतवति दैवादवहेलां कुटज मधुकरे मा गाः ।**
**मकरन्दतुन्दिलानामरविन्दानामयं महामान्यः ॥ ५ ॥**

रे कुटज । 'नवकुटजकदम्बामोदिनो गन्धवाहाः' इति भर्तृहरेः, 'उन्मीलन्ति कदम्बानि स्फुटन्ति कुटजद्रुमाः' इति कुवलयानन्दकारिकायाश्चोक्तेः 'कुडा' इति महाराष्ट्रभाषाप्रसिद्धो वर्षाकालविकासी कश्चित्तिक्ततमो वृक्षविशेषः कुटजस्तत्संबुद्धौ । एतेनातिनिन्द्यत्वं ध्वनितम् । दैवात्प्रारब्धाद्धेतोः समुपागतवति सादरं समीपमभिसर्पति । एतेनावश्यादरणीयत्वं व्यज्यते । तत्रापि मधुकरे मधुसंपादके त्वयि तदाविर्भावाभावेऽपि स्वसांनिध्येन तज्जनके भृङ्गविषये, न तु भ्रमरे । एवं च व्ययहेतुत्वेऽव्ययकारणत्वान्नित्यसंग्राह्यत्वं सूचितम् । अवहेलामवज्ञां मा गाः । माकार्षीरित्यर्थः । एवमप्यनास्थायामाह—मकरन्देत्युत्तरार्धेन । तस्मात्त्वयायं सर्वथा सेव्य एवेत्याशयः । इह पूज्यो नायकः । करुणो रसः । काव्यलिङ्गमप्यलंकारः ॥

अस्त्वेवं सति विभवे नीत्युपदेशः कस्यचिद्दैवाद्विपत्तौ सत्यां कथं कार्यं तेनेत्यत्र धैर्यमेव । उक्तं हि भर्तृहरिणा—'विपदि धैर्यमथाभ्युदये क्षमा सदसि वाक्पटुता युधि विक्रमः । यशसि चाभिरुचिर्व्यसनं श्रुतौ प्रकृतिसिद्धमिदं हि महात्मनाम् ॥' इतीति कोकिलान्योक्त्या व्यनक्ति तावदित्यार्यया—

**तावत्कोकिल विरसान्यापय दिवसान्वनान्तरे निवसन् ।**
**यावन्मिलदलिमालः कोऽपि रसालः समुल्लसति ॥ ६ ॥**

हे कोकिल, त्वं तावद्वनान्तरेऽरण्यमध्ये । एतेन धैर्यभङ्गहेतुविषयिसङ्गव्युदासः सूचितः । निवसन्नितरां तिष्ठन्सन्नित्यर्थः, न तु क्षणमात्रं विहरन् । एवं च तत्संभवाभावो व्यज्यते । विरसान्दिवसान्यापय । नयेत्यर्थः । तावत्पदापेक्षितं पूरयति—यावदित्युत्तरार्धेन । रसाल आम्रः । 'आम्रश्चूतो रसालोऽसौ' इत्यमरः । मिलदिति । मिलन्त्याश्लिष्यन्ति मिलन्त्योऽभिसमालिङ्गन्त्यो वालिमाला भ्रमरपङ्क्त्यो यस्मिन्स तथेत्यर्थः । तस्मात्स्वाभीष्टदविकासपर्यन्तं धैर्यमेवावलम्ब्य विपन्नेन वन एव विहर्तव्यमिति तात्पर्यम् । इह करुणो नायकः । शान्तो रसः । लोकोक्तिरप्यलंकारः । तदुक्तम्—'लोकप्रवादानुकृतिर्लोकोक्तिरिति भण्यते ॥ सहस्व कतिचिन्मासान्मीलयित्वा विलोचने ॥' इति ॥

ननु भवता भूर्युपदेशे क्रियमाणेऽपि मम संशयः पुनः पुनर्नवो नव एवाविर्भवतीति धिङ् मामतिनीचमिति स्वमनसि खिन्नमिव शिष्यमालक्ष्य गुरुस्तं कूपान्योक्त्या प्रोत्साहयति—

**नितरां नीचोऽस्मीति त्वं खेदं कूप मा कदापि कृथाः ।**
**अत्यन्तसरसहृदयो यतः परेषां गुणग्रहीतासि ॥ ७ ॥**

नितरामिति । हे कूप, अहं नितरामत्यन्तं नीचो निम्नः। पक्षे हीनः। कुतार्किक इत्यर्थः । अस्मीति खेदं कदापि मा कृथाः। नैव कुर्वित्यर्थः। तत्र हेतुः—अत्यन्तेत्युत्तरार्धेन। यतस्त्वमत्यन्तसरसहृदयः । रसो जलम्। पक्षे शृङ्गारादिः। तेन सहितं सरसमत्यन्तमुत्कटं सरसं हृदयमन्तःप्रदेशः । पक्षे मनो यस्य । तथा परेषां लोकानाम् । गुणेति । गुणो नीत्युपदेशादिः । पक्षे रज्जुः । तं गृह्णातीति तथा । एतादृशोऽसीत्यर्थः । अत्र काव्यलिङ्गमलंकारः । शिष्टं प्राग्वत् ॥

ननु तत्र वनादावपि केनचिदवज्ञा कृता चेत्तदा किं विधेयमित्याशङ्क्य स्वगुणज्ञलाभसंभावनया धैर्यमेवेति कमलिन्यन्योक्त्या व्यनक्ति—

**कमलिनि मलिनीकरोषि चेतः**
**किमिति बकैरवहेलितानभिज्ञैः ।**
**परिणतमकरन्दमार्मिकास्ते**
**जगति भवन्तु चिरायुषो मिलिन्दाः ॥ ८ ॥**

कमलिनीति । इह पूर्वार्धं तु सरलमेव । तस्मान्मूर्खकृतावज्ञावशात्खेदो नैव कर्तव्य इति भावः । तत्र हेतुः—परिणतेत्युत्तरार्धेन । परिणतः परिपक्व एतादृशो यो मकरन्दः पुष्परसस्तस्य मार्मिकाः । मर्मज्ञा इत्यर्थः । एतादृशा मिलिन्दा भ्रमराः । स्पष्टमेव शिष्टम् । तस्माद्गुणज्ञा एव त्वद्गुणाञ्ज्ञास्यन्ति न त्वन्य इति तल्लाभार्थं धैर्यमेव धार्यमिति तत्त्वम् । अत्र खिन्ना नायिका । करुणो रसः । निरुक्त एवालंकारः । वृत्तमिदं पुष्पिताग्राभिधम् । तदुक्तम्—'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति ॥

अथ महापद्यपि नीचपरिचरणं नैव कर्तव्यमिति भ्रमरान्योक्त्या व्यनक्ति येनेत्यार्यया—

**येनामन्दमरन्दे दलदरविन्दे दिनान्यनायिषत ।**
**कुटजे खलु तेनेहा तेने हा मधुकरेण कथम् ॥ ९ ॥**

अमन्देति । प्रचुरमकरन्द इत्यर्थः । दलदिति । विकसितकमल इति यावत् । एतेन सकलसुखसामग्री सूचिता । अनायिषत । नीतानीत्यर्थः । खल्विति तेनेत्यनेनान्वेति । तथा च तेनैव न त्वन्येन । एतेनानौचित्यं सूचितम् । मधुकरेण कुटजे प्रागुक्तद्रुम ईहा इच्छापि । हा इति खेदे । कथं तेने किमिति विस्तारितेति संबन्धः । इह विपन्नो नायकः । करुणो रसः । परिकरोऽप्यलंकारः ॥

ननु यदि कश्चिदनेकगुणाधिकरणमपि गुण्यादिषु तुल्यदृष्ट्यैव तत्पोषकश्चेत्तत्र गुणिनो मे कथमाधिक्यं स्यादिति चेत्तत्स्तुत्यैवेति चन्दनान्योक्त्या व्यनक्ति अयीत्यार्याविशेषेण—

**अयि मलयज महिमायं कस्य गिरामस्तु विषयस्ते ।**
**उद्गिरतो यद्गरलं फणिनः पुष्णासि परिमलोद्गारैः ॥ १० ॥**

कोमलसंबोधनेन स्वस्मिन्पाटवं द्योतितम् । मलयेति । कुलीनत्वेन स्तुत्यर्हत्वं व्यज्यते । अयं प्रत्यक्षस्ते तव महिमा माहात्म्यं कस्य गिरां वाचां विषयोऽस्तु । अनिर्वाच्यत्वान्न कस्याप्यस्त्वित्यर्थः । कस्य विधातुः । अस्मदादीनां नैवेति वा । तमेव कथयंस्तत्र हेतुमपि द्योतयति—उदित्युत्तरार्धेन । गरलं विषमुद्गिरतो वमतः । एतेनातिहेयत्वं सूचितम् । एतादृशान्फणिनो नागान्परिमलोद्गारैर्यत्पुष्णासि । पोषयसीत्यर्थः । अपकारिष्वप्युपकारित्वं तवालौकिकमेवेति भावः । इह समदृष्टिर्नायकः । शान्तो रसः । उक्त एवालंकारः ॥

स्तुतिर्हि विपुलैव कार्यकारिणीति द्योतयितुं पुनर्निरुक्तान्योक्त्यैव तां व्यनक्ति—

**पाटीर तव पटीयान्कः परिपाटीमिमामुरीकर्तुम् ।**
**यत्पिषतामपि नृणां पिष्टोऽपि तनोषि परिमलैः पुष्टिम् ॥ ११ ॥**

पाटीरेति । पाटीरेति चन्दनसंबोधनम् । पटाः सन्ति यस्य स पटी तन्तुवायः तद्वत् ईरयति स्वगुणानन्यत्र पटादौ स यथा प्रेरयति तद्वत्स्वनिष्ठसौरभ्यादिधर्मांश्चन्दनद्रुमादौ प्रेरयतीति पटीरो मलयाचलस्तत्र भवः पाटीरस्तत्संबुद्धावयि मलयनिलय चन्दनेत्यर्थः । तवेमां वक्ष्यमाणत्वेन प्रत्यक्षां परिपाटीं रीतिमुरीकर्तुं स्वीकर्तुं कः पटीयानस्ति । न कोऽपीत्यर्थः । तस्मात्त्वमेव धन्य इत्याशयः । तत्र हेतुमाह—यदित्युत्तरार्धेन । यद्यस्माद्धेतोस्त्वं पिषतामपि पेषणेन चूर्णीकुर्वतामपि । एतेन परमतितिक्षुत्वं ध्वनितम् । एतादृशां नृणां मनुष्याणां पिष्टोऽपि परिमलैः पुष्टिं तनोषि । विस्तारयसीत्यर्थः । इह क्षमी नायकः । शान्तो रसः । काव्यलिङ्गमलंकारः ॥

नन्वेवमपि स यदि मत्कार्यं नैव विवेचयिष्यति तदा किं वक्तव्यमिति चेद्धंसान्योक्त्या तद्ध्वनयति—

**नीरक्षीरविवेके हंसालस्यं त्वमेव तनुषे चेत् ।**
**विश्वस्मिन्नधुनान्यः कुलव्रतं पालयिष्यति कः ॥ १२ ॥**

नीरेति । हे हंसेति संबुद्धिः । एवकारेण त्वयैवमालस्यं नैव कार्यमिति व्यज्यते । तत्रानिष्टापत्तिं स्पष्टयति—विश्वस्मिन्नित्युत्तरार्धेन । इह जडो नायकः । उक्त एव रसोऽलंकारश्च ॥

नन्वेवमुक्तौ स क्रुध्यति चेत्तत्र वक्तव्यां स्तुतिं व्यनक्ति—

**उपरि करवालधाराकाराः क्रूरा भुजंगमपुंगवात् ।**
**अन्तःसाक्षाद्द्राक्षादीक्षागुरवो जयन्ति केऽपि जनाः ॥ १३ ।**

उपरीति । बहिः । करवालेति । करवालः खङ्गस्तस्य धारा तद्वदाकारो रोषव्यञ्जकव्यक्तिविशेषो येषाम् । तत्र हेतुः—भुजगंमेति । भुजंगमाः सर्पास्तेषु पुंगवः श्रेष्ठस्तस्मात्सर्पराजादपि क्रूराः । क्रोधना इत्यर्थः । तर्ह्यन्तरपि ते तथैव स्युरिति सर्वोत्कटत्वेनोक्ततद्वर्णनं कथम् । तत्राह—अन्तरिति शेषेण । द्राक्षेति । मृद्वीकानामपि माधुर्योपदेशदेशिका इति यावत् । एतादृशाः केऽपि जना जयन्तीति योजना । अर्थात्तादृशा भवन्त एवेति द्योत्यते । इह निष्कपटो नायकः । शान्त एव रसः । प्रतीपमलंकारः ॥

स यदि दुर्जनोपदेशादेतन्न मनुते चेत्तत्रोक्तामेव 'अयि दलद्' (१।४) इति कमलान्योक्तिं भङ्ग्यन्तरेण पठितुं स्पष्टयति—

**स्वच्छन्दं दलदरविन्द ते मरन्दं**
**विन्दन्तो विदधतु गुञ्जितं मिलिन्दाः ।**
**आमोदानथ हरिदन्तराणि नेतुं**
**नैवान्यो जगति समीरणात्प्रवीणः ॥ १४ ॥**

स्वेति । विन्दन्त आस्वादयन्तः । विदधतु कुर्वन्तु । समीरणाद्वायोः । शेषमुक्तप्रायमेवाधस्तात् । प्रहर्षणीवृत्तमिदम् । तदुक्तम्—'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षणीयम्' इति ॥

ननु स निरुक्तवाक्यं श्रुत्वा रोषं करिष्यतीति चेद्वदान्यत्वकरुणत्वादिसूचकेन पद्यान्तरेण स्तोतव्य इति द्योतयितुं तदेव सरोवरान्योक्तिघटितं पद्यं पठति—

**याते मय्यचिरान्निदाघमिहिरज्वालाशतैः शुष्कतां**
**गन्ता कं प्रति पान्थसंततिरसौ संतापमालाकुला ।**
**एवं यस्य निरन्तराधिपटलैर्नित्यं वपुः क्षीयते**
**धन्यं जीवनमस्य मार्गसरसो धिग्वारिधीनां जनुः ॥१५॥**

यात इति । मयि । निदाघेति । ग्रीष्मकालीनोष्णरश्मिजन्यातपार्चिःसहस्रैरित्यर्थः । अत एव अचिराच्छीघ्रं शुष्कतां नीरसतां याते प्राप्ते सति । असौ विप्रकृष्टा । संतापेति । उक्तातपावलितरलितेत्यर्थः । एतादृशी । पान्थेति । पथिकपरम्परेति यावत् । कं प्रति गन्ता कं वदान्यं प्रति जीवनयाचनार्थं गमिष्यति । नैव कमपि गमिष्यतीत्यर्थः । उत्तरार्धं तु सरलमेव । मार्गपदं सन्मार्गद्योतकम् । एवं जीवनपदमपि श्लेषेणोदकस्य प्राणनस्य च सूचकम् । जनुः । जन्मेत्यर्थः । 'जनुर्जननजन्मानि' इत्यमरः । तस्मादल्पसत्त्वोऽपि भाविसंकटप्राप्तावर्थिवैमुख्यसंभावनया पूर्वमेव क्षीयमाणतनुर्वदान्य एव धन्यो न त्वन्ये भूरिभाग्यसंपन्ना अपीत्याशयः । अत्र पूर्वार्धे सदयकरुणौ परार्धे धीरदानवीरौ च नायकरसौ । काव्यलिङ्गमप्यलंकारः । शार्दूलविक्रीडितं वृत्तम् । तल्लक्षणं तु प्रागेवोक्तम् ॥

ननु तत्राप्ययं नैव प्रसीदतीति चेत्स्वानन्यगतिकत्वध्वननेन प्रसादमूलीभूतं तत्र स्वविषयकपरमकरुणोत्पादनमेव मीनान्योक्त्या विधेयमिति व्यनक्ति—

**आपेदिरेऽम्बरपथं परितः पतङ्गा**
**भृङ्गा रसालमुकुलानि समाश्रयन्ति ।**
**संकोचमञ्चति सरस्त्वयि दीनदीनो**
**मीनो नु हन्त कतमां गतिमभ्युपैतु ॥ १६ ॥**

आपेदिर इति । हे सरः सरोवर, त्वयि संकोचं ग्रीष्मोष्मणा ह्रासमञ्चति स्वीकुर्वति सतीत्यर्थः । पतङ्गाः 'पतङ्गौ पक्षिसूर्यौ च' इत्यमराद्धंससारसादयः पक्षिणः परितः समन्तादम्बरपथमाकाशमार्गमापेदिरे । प्रापुरित्यर्थः । न केवलमेत एव तथा किं त्वन्येऽपीत्याह—भृङ्गा इति द्वितीयपादेन । रसालेति । रसाल आम्रः । 'आम्रश्चूतो रसालोऽसौ' इत्यमरः । 'कुड्मलो मुकुलोऽस्त्रियाम्' इति च । अतो दीनदीनो दीनेभ्योऽनन्यगतिकेभ्यो नक्रादिभ्योऽपि दीनः । परमानन्यगतिक इत्यर्थः । मीनो मत्स्यः । नु वितर्के । हन्तेति खेदे । कतमां कां वा गतिमभ्युपैतु । तस्य त्वदुदकप्राचुर्यं विना गत्यन्तराभावान्न कामपि गतिमभ्युपैत्वित्यर्थः । तस्मादनेन त्वत्पङ्क एव विकलीभूय लोकान्तरे गन्तव्यमिति भावः । एतेन त्वयायं नैवोपेक्षणीय इति व्यज्यते । अत्र करुणावेव नायकरसौ । परिकरोऽप्यलंकारः । वसन्ततिलका वृत्तम् । तदुक्तम्—'उक्ता वसन्ततिलका तभजा जगौ गः' इति ॥

ननु स यदि ब्रूयात्किमेवं मदनिष्टं चिन्तयसीत्यत्र किं कार्यमिति चेत्कमलिन्यन्योक्त्या स्वस्य परहितैकनिरतत्वं व्यञ्जनमेवेति वदंस्तामेवाह—

**मधुप इव मारुतेऽस्मिन्मा सौरभलोभमम्बुजिनि मंस्थाः ।**
**लोकानामेव मुदे महितोऽप्यात्मामुनार्थितां नीतः ॥ १७ ॥**

मधुप इवेति । हे अम्बुजिनि कमलिनि । एतेनोक्तानिष्टचिन्तनसंभावनारूपविपरीतबोधवत्त्वात्तत्र स्त्रीबुद्धित्वं ध्वनितम् । पक्षे भो पद्मिनि, त्वं मधुप इव भ्रमर इव । पक्षे मद्यप इव ।

अस्मिन्मारुते वायौ । पक्षे मे लक्ष्मीब्रह्मप्रमे तत्कारि रुतं शब्दितं यस्य तस्मिन्गुराविर्यर्थः । विषयसप्तमीयम् । सौरभेति । सौगन्ध्यलोभम् । सूर्यविकासित्वान्निशि मुकुलीभावेन स्वपरिमलवितरणकार्पण्यमित्यर्थः । पक्षे मुखप्रसादादिना निजमनोज्ञत्वाप्रकाशनमिति यावत् । मा मंस्था मा मननविषयीकुर्या इत्यर्थः । तत्र हेतुः—लोकानामेवेत्युत्तरार्धेन । यतोऽमुना मारुतेन महितोऽपि पूजितोऽप्यात्मा स्वदेहो लोकानामेव मुदे जनानामेव संतोषार्थमर्थितां नीत इति योजना । एवं चास्य स्वप्रयोजनं न किमपीति द्योतितम् । तस्मान्नायमनादरणीय इत्याशयः । इह मुग्धा नायिका । पूज्यो नायकः । शान्तो रसः । श्लेषोऽप्यलंकारः ॥

नन्वेतदपि श्रुत्वा स तूष्णीमेव स्थास्यति चेत्किं कर्तव्यमित्याशङ्क्य तत्र पठनीयां स्वमहत्त्वसूचिकां मालत्यन्योक्तिं वक्ति—

**गुञ्जति मञ्जु मिलिन्दे मा मालति मौनमुपयासीः ।**
**शिरसा वदान्यगुरवः सादरमेनं वहन्ति सुरतरवः ॥ १८ ॥**

गुञ्जतीति । हे मालति । स्त्रीलिङ्गसंबोधनं प्राग्वत् । त्वं मञ्जु मनोज्ञम् । 'मञ्जु मञ्जुलम्' इत्यमराद्रम्यं यथा स्यात्तथेत्यर्थः । गुञ्जति गुञ्जारवं कुर्वति मिलिन्दे भ्रमरे विषये इति यावत् । मौनं मोपयासीर्नैव कुर्या इत्यर्थः । तत्र हेतुः—शिरसेत्यादि । यत एनंम् । वदान्येति । दातृवरा अपि सुरतरवः कल्पद्रुमाः सादरं शिरसा वहन्तीत्यन्वयः । इह नायिकादिकमुक्तमेव । मौनशिरःपदे लाक्षणिकत्वेन श्लेषव्यञ्जके ॥

ननु तत्र कश्चित्कर्णेजपो विरुद्धं बोधयेच्चेत्तदा कथमित्याशङ्कायां तत्र वक्तव्यां चन्दनान्योक्तिं कथयति—

**यैस्त्वं गुणगणवानपि सतां द्विजिह्वैरसेव्यतां नीतः ।**
**तानपि वहसि पटीरज किं कथयामस्त्वदीयमौन्नत्यम् ॥१९॥**

यैस्त्वमिति । हे पटीरज भो मलयज चन्दन, गुणगणवानपि त्वं यैर्द्विजिह्वैः सर्पैः । पक्षे सूचकैः । सतामसेव्यतां नीतस्तानपि वहसीत्यादि सरलमेव । औन्नत्यं महत्त्वम् । इह मूढो नायकः । व्याजस्तुतिरप्यलंकारः ॥

ननु ततोऽसावुत्थायान्यत्रैव रोषाज्जिगमिषुश्चेत्तत्र किं वाच्यमित्यत्र वक्तव्यां भृङ्गान्योक्तिं कथयति—

**अपनीतपरिमलान्तरकथे पदं न्यस्य देवतरुकुसुमे ।**
**पुष्पान्तरेऽपि गन्तुं वाञ्छसि चेद्भ्रमर धन्योऽसि ॥ २० ॥**

अपनीतेति । हे भ्रमर, त्वम् । अत्र 'मधुप'–इत्यपि पाठः । अपेति । दूरीकृतान्यसौरभ्यवार्त इत्यर्थः । अत एव देवेति । अत्रोक्तावेव नायकालंकारौ ॥

नन्वेवमपि दुर्जनवाक्य एवासौ श्रद्धानश्चेत्तर्हि नद्यन्योक्त्या स विबोधनीय इति ध्वनयति तामेव पठन्—

**तटिनि चिराय विचारय विन्ध्यभुवस्तव पवित्रायाः ।**
**शुष्यन्त्या अपि युक्तं किं खलु रथ्योदकादानम् ॥ २१ ॥**

तटिनीति । हे तटिनि । 'तरङ्गिणी शैवलिनी तटिनी ह्रादिनी धुनी' इत्यमरादयि नदीत्यर्थः । त्वं चिराय बहुकालमिति विचारयेति विवेकं कुर्वित्यर्थः । अत्र स्त्रीत्वेन संबोधनमविवेकित्वं व्यनक्ति । इतीति किम् । तदेवाह—विन्ध्येत्यादि शेषेण । विन्ध्याचलोत्पन्नायाः । एतेन सद्गुरुभक्त्युत्कटत्वयोग्यत्वं द्योत्यते । अत एव पवित्रायास्तव शुष्यन्त्याः सत्या अपि रथ्योदकादानं रथ्यावर्तिदुर्गन्धोदकस्वीकरणं खलु युक्तं किमिति योजना । तत इदमनुचितमेवेति भावः । अत्र कुलीना मुग्धा नायिका । परिकरोऽप्यलंकारः ॥

नन्वथापि स नैव त्वमनुसरति चेत्तत्र वक्तव्यां बर्बुरान्योक्तिं कथयन्देशत्यागो हि दुर्जनादिति न्यायात्ततो वदान्यान्तरमेव गन्तव्यमिति व्यनक्ति—

**पत्रफलपुष्पलक्ष्म्या कदाप्यदृष्टं वृतं च खलु शूकैः ।**
**उपसर्पेम भवन्तं बर्बुर वद कस्य लोभेन ॥ २२ ॥**

पत्रेति । हे बर्बुर । 'बाभुळ' इति देशभाषाप्रसिद्धवृक्षविशेषेत्यर्थः । पत्रेति । न केवलं गुणाभाव एव किं तु दोषपरिपोषोऽपीत्याह—वृतं चेत्यादि । शूकैः कण्टकैः । 'शूकोऽस्त्री श्लक्ष्णतीक्ष्णाग्रः' इत्यमरः । खलु वृतं कण्टकमात्राकुलाखिलशाखमित्यर्थः । क्वचित् 'वृतं च बत' इति पाठः । चः समुच्चये । एतादृशं गुणहीनं दोषवन्तं च भवन्तं वयमर्थिनः कस्य वस्तुनो लोभेनोपसर्पेम त्वन्निकटे आगमनं करवामेति त्वमेव वदेति संबन्धः । तस्मादितोऽन्यत्रैव गच्छामेति तत्त्वम् । इह दुष्टो नायकः । उक्त एवालंकारः ॥

तत्र कश्चित्स्वसुहृच्चेत्स्वनिर्गमनावसरे स कथमुपदेश्य इत्याशङ्कयानया कोकिलान्योक्त्येत्याह—

**एकस्त्वं गहनेऽस्मिन्कोकिल न कलं कदाचिदपि कुर्याः ।**
**साजात्यशङ्कयामी न त्वां निघ्नन्ति निर्दयाः काकाः ॥ २३ ॥**

एकस्त्वमिति । हे कोकिल, यत एकस्त्वमस्मिन्गहने । 'गहनं काननं वनम्' इत्यमरादरण्ये । अतः कदाचिदपि कलमव्यक्तमधुरध्वनिं न कुर्या मैव कुर्वित्यर्थः ॥ तत्र हेतुः—साजात्येति । यतोऽमी निर्दयाः काकास्त्वां साजात्यशङ्कया निजजातीयभ्रान्त्या न निघ्नन्तीत्यन्वयः । उक्तध्वनिरचने तु भ्रान्त्यपगमान्निर्दयत्वस्वाभाव्येन मारयिष्यन्त्येवेति भावः । इह करुणावेव नायकरसौ । भ्रान्तिमानप्यलंकारः ॥

अथ कदाचित्स राजा स्वगुणाकृष्टतयानुनेतुमायास्यति चेत्तत्र वक्तव्यां हिमाचलान्योक्तिमाह—

**तरुकुलसुषमापहरां जनयन्तीं जगति जीवजातार्तिम् ।**
**केन गुणेन भवानीतात हिमानीमिमां वहसि ॥ २४ ॥**

तरुकुलेति । 'सुषमा परमा शोभा,' 'हिमानी हिमसंहतिः' इति चामरः । 'जातिर्जातं च सामान्यम्' इत्यपि । 'आर्तिः पीडाधनुःकोट्योः' इति च । हे भवानीताततेति महत्त्वसूचकम् । तेन तवेदमनुचितमिति तात्पर्यम् । अत्रोदात्तो नायकः । परिकरोऽप्यलंकारः ॥

किमेवं दुर्जनतिरस्करणमेवोपदेशनीयं तावतैवं स्वादिसज्जनादरसंभवादिति चेन्न । सज्जनादरोपदेशस्याप्यपेक्षितत्वात् । न हि शोधनादिना निर्दोषमपि गोदुग्धं शर्कराप्रक्षेपादि न वाञ्छतीति तात्पर्येण तत्सूचिकां कलभान्योक्तिं वक्ति—

**कलभ तवान्तिकमागतमलिमेनं मा कदाप्यवज्ञासीः ।**
**अपि दानसुन्दराणां द्विपधुर्याणामयं शिरोधार्यः ॥ २५ ॥**

कलभेति । यद्यप्येवंजातीय का सा 'समुपागतवति दैवात्' (१।५) इति प्रागुक्तैव तथापि तत्र कुटजपदस्यात्यन्तजाड्यव्यञ्जकत्वादिह तु राज्ञः स्वगुणपारवश्येन तथात्वाभावादीषज्जडत्वविवक्षयैव करिशावकवाचिना कलभपदेन ध्वननान्नाम्रेडितत्वावकाशः । 'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्' इत्यमरादन्तिकं समीपम् । अवज्ञासीरवज्ञाविषयीकुर्या इत्यर्थः । तत्र हेतुः—अपि दानेति । दानं मदोदकम् । पक्षे वितरणम् । तेन सुन्दराः सुभगास्तेषाम् । अत एव द्विपेति । द्विपाः 'द्विरदोऽनेकपो द्विपः' इत्यमराद्गजास्तेषां धुर्याः । 'धुर्वहे धुर्यधौरेयधुरीणाः स धुरंधराः' इत्यपि तदुक्तेः श्रेष्ठास्तेषामित्यर्थः । गजराजानामप्ययं शिरोधार्य इत्यन्वयः । इह पूज्यतरो नायकः । शान्तो रसः । काव्यलिङ्गमप्यलंकारः ॥

ननु तत्राप्यसावुदासीन एव चेत्तत्र स्वानुरागजनिकां वक्तव्यां भ्रमरान्योक्तिमाह—

**अमरतरुकुसुमसौरभसेवनसंपूर्णसकलकामस्य ।**
**पुष्पान्तरसेवेयं भ्रमरस्य विडम्बना महती ॥ २६ ॥**

अमरेति । सुरद्रुमपुष्पसौगन्ध्यास्वादनपर्याप्तसर्वमनोरथस्येत्यर्थः । एतादृशस्य भ्रमरस्य पुष्पान्तरसेवेयं महती विडम्बना अनौचितीभवतीति योजना । तस्मादस्मदादरोऽवश्यं निरन्तरं विधेय एवेति भावः । इह नायकरसौ तूक्ताविव । परिकरोऽप्यलंकारः ॥

एवं संपद्विपन्नीत्युपदेशश्रवणेन तुष्टः शिष्यः शिष्टतरं सोपदेष्टारं स्तौति—पृष्टा इत्यादित्रिभिः । तत्र निरुपमत्वं प्रथममाम्रान्योक्त्या व्यनक्ति—

**पृष्टाः खलु परपुष्टाः परितो दृष्टाश्च विटपिनः सर्वे ।**
**माकन्द न प्रपेदे मधुपेन तवोपमा जगति ॥ २७ ॥**

पृष्टा इति । हे माकन्द । 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः । कामाङ्गो मधुदूतश्च माकन्दः पिकवल्लभः ॥' इत्यमरादप्याम्रेत्यर्थः। पक्षे मा लक्ष्मीः ब्रह्मविषयक प्रमा च तस्यास्तयोर्वा कन्द इव मूलकारणं तत्संबुद्धौ । तथा भोः चतुर्वर्गप्रद सद्गुरो इति यावत् । मधुपेनातिनीचेनापि भ्रमरेण । पक्षे बार्हदारण्यकमधुब्राह्मणोक्तमधुशब्दितं ब्रह्म पिबति बुभुत्सुत्वेनास्वादयतीति तथा तेन । क्रममुमुक्षुणेत्यर्थः । यद्यपि । परेति । परैर्लोकैः स्वैहिकादिफलार्थं पोषिता इत्यर्थः । एतेन मुख्यत्वं सूचितम् । एतादृशः सर्वेऽपि विटपिनो वृक्षाः । अत्र शाखिपदं चेत्पूर्णः श्लेषः । पृष्टाः प्रश्नविषयीकृताः । ततो दृष्टा अनुभूताश्च । यद्वा परपुष्टाः कोकिलाः । पक्षे परेण परमात्मना पुष्टाः पूर्णाः । पृष्टा विटपिनो दृष्टाश्चेति । तथापि जगति तवोपमा त्वदृष्टान्तो न प्रपेदे नैव लब्ध इति संबन्धः । इह निरुपमो नायकः । शान्त एव रसः । गुरुविषयकरतिभावो वा । श्लेषोऽप्यनन्वयश्चालंकारः ॥

ननु मया यत्किंचिदेव नीतिजातमुपदिष्टं तत्किमिति निरुपमत्वेन मां स्तौषीत्याशङ्क्य 'किंचानर्घ्यं यदवसरे दत्तम्' इति प्रश्नोत्तररत्नमालिकायां श्रीमद्विमलाचार्यचरणारविन्दवचनात्समयेऽनुशास्तृत्वेन सुरगुरुप्रभृतिभ्योऽपि भवदाधिक्यमेव भवतीति मालाकारान्योक्त्या द्योतयति—

**तोयैरल्पैरपि करुणया भीमभानौ निदाघे**
**मालाकार व्यरचि भवता या तरोरस्य पुष्टिः ।**
**सा किं शक्या जनयितुमिह प्रावृषेण्येन वारां**
**धारासारानपि विकिरता विश्वतो वारिदेन ॥ २८ ॥**

तोयैरिति । हे मालाकार । मालाः पुष्पस्रजः करोतीति तथा । तत्संबुद्धौ । भवता कर्त्रा करुणया अल्पैरपि तोयैर्वाप्याद्युद्धृतैर्जलैः करणैरस्य तरोर्या पुष्टिर्भीमभानौ भीमश्चण्डो भानुः सूर्यो यस्मिंस्तत्र निदाघे ग्रीष्मर्तौ व्यरचि अकारीत्यन्वयः । किं ततस्तत्राह—सेत्युत्तरार्धेन । सा पुष्टिरिह लोके प्रावृषेण्येन प्रावृषि वर्षाकाले भवः प्रावृषेण्यः प्रावृट्कालीनस्तेनेत्यर्थः । अत एव विश्वतः सर्वतः वाराम् 'आपः स्त्री भूम्नि वार्वारि' इत्यमराज्जलानामित्यर्थः । धारासारानपि धाराश्चासाराश्च धारासारास्तान् । धारा जलधाराः प्रसिद्धा एव । तथा आसाराः 'धारासंपात आसारः' इत्यमराद्धाराणां संभूयपतनमिति रामाश्रमकृताद्व्याख्यानाच्च धाराणां समुच्चितपरिपातास्तानपीत्यर्थः । एतेन पुष्टिसामग्रीप्राचुर्यं सूचितम् । विकिरता वर्षता । एतादृशेन वारिदेन मेघेन जनयितुं कर्तुं शक्या योग्या किम् । अपि तु नैव योग्येति योजना । तस्मात्त्वं निरुपमत्वेन स्तोतुं योग्य एवेति भावः । अत्रोक्त एव नायको भावश्च । प्रतीपविशेषोऽलंकारोऽपि । मन्दाक्रान्तावृत्तम् । तदुक्तम्—'मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत्' इति ॥

एवं निरुक्तश्लोकेऽल्पपदं क्षुद्रत्वं गुरुवाचि व्यनक्तीत्यस्वरसान्मेघान्योक्त्या पुनः स्तौति—

**आरामाधिपतिर्विवेकविकलो नूनं रसा नीरसा**
**वात्याभिः परुषीकृता दश दिशश्चण्डातपो दुःसहः ।**
**एवं धन्वनि चम्पकस्य सकले संहारहेतावपि**
**त्वं सिञ्चन्नमृतेन तोयद कुतोऽप्याविष्कृतो वेधसा ॥२९॥**

आरामेति । हे तोयद जलद । आरामेति । 'आरामः स्यादुपवनम्' इत्यमरादुद्याननायकः । विवेकेति । विचारहीनः । नूनं निश्चितम् । अस्तीति शेषः । एवं 'रसा विश्वंभरा स्थिरा' इत्यमराद्रसा पृथ्वी । नीरसा निर्गता रसा उदकानि यस्याः सकाशात्तथा । जलहीनेत्यर्थः । तद्व-द्वात्याभिश्चक्रवातैर्दशदिशः परुषीकृता रूक्षीकृताः सन्तीति यावत् । तथा । चण्डेति । चण्डस्तीव्र आतपः 'प्रकाशो द्योत आतपः' इत्यमरात्प्रकाशो यस्य स तथा । सूर्य इत्यर्थः । दुःसहो ग्रीष्मका-लिकत्वेन सोढुमशक्योऽस्तीति यावत् । एवं धन्वनि । 'समानौ मरुधन्वानौ' इत्यमरान्मरुदेशे चम्पकस्य । सकले संहारेति । ध्वंसकारणे सत्यपीत्यर्थः । त्वममृतेन । 'पयः कीलालममृतम्' इत्यमराज्जलेन । पक्षे पीयूषेण । सिञ्चन्नाप्लावयन् । एतादृशो वेधसा 'स्रष्टा प्रजापतिर्वेधाः' इत्यमराद्ब्रह्मणा कुतोऽप्यस्यादृष्टाद्धेतोः । आविष्कृतः प्रकटीकृतोऽसीति संबन्धः । अतस्त्व-ल्लाभ एव पुमर्थ इत्याशयः । इहोक्तावेव नायकरतिभावौ । प्रहर्षणमप्यलंकारः । शार्दूलवि-क्रीडितं वृत्तं तूक्तमेव ॥

एवं स्तुतिमाकर्ण्य निर्विण्णः श्रीगुरुः "किमनया स्तुत्या । यदुक्तम्—'अद्यापि दुर्निवारं स्तुतिकन्या वहति कौमारम् । सद्भ्यो न रोचते सासन्तोऽप्यस्यै न रोचन्ते ॥' इति । किंच 'येषां निमेषमात्रेण जगतः प्रलयोदयौ । तादृशाः पुरुषा याता मादृशां गणनात्र का ॥' इति वचनादलमस्मदीयस्तवेन" इति द्योतयन्महानुभावशरीरनाशमनुसंधाय शोचति न यत्रेति सिंहान्योक्त्या—

**न यत्र स्थेमानं दधुरतिभयभ्रान्तनयना**
**गलद्दानोद्रेकभ्रमदलिकदम्बाः करटिनः ।**
**लुठन्मुक्ताभारे भवति परलोकं गतवतो**
**हरेरद्य द्वारे शिवशिव शिवानां कलकलः ॥ ३० ॥**

यत्र हरेर्द्वारे । गलदिति । गलत्स्रवद्यद्दानं मदोदकं तस्योद्रेकेण बाहुल्येन भ्रमन्ति अलि-कदम्बानि भ्रमरवृन्दानि येषु ते तथा । न तु साधारणाः । एतेन मदोन्मत्तत्वं सूचितम् । एतादृशः करटिनः । उक्तार्थमिदं प्राक् । गजेन्द्रा इत्यर्थः । अतीति । अतुलभीतिचकित-लोचनाः सन्त इति यावत् । स्थेमानं स्थिरीभावं न दधुर्नैव बभ्रुरित्यन्वयः । तत्र परलोकं स्वर्गादिलोकान्तरं गतवतः । जगामेति गतवांस्तस्य पञ्चत्वं प्राप्तस्येत्यर्थः । एतादृशस्य हरेः ।

हर्यक्षः केसरी हरिः' इत्यमरात्सिंहस्य । लुठदिति । लुठन्ति श्वापदपादैः प्रचलन्ति ते तथा । मुक्तानां विदारितमतङ्गजगण्डस्थलजातमौक्तिकानां भाराः प्रचुरनिकरा यस्मिंस्त-
नथः । एतादृशे द्वारे दरीमुखेऽद्य । शिवशिवेति खेदाद्भगवन्नामस्मरणम् । शिवानां क्रो-
ष्ट्रीणां कलकलः कोलाहलो भवतीति योजना । तस्मान्नश्वरमेवेदमखिलं दृश्यवैभवमिति
भावः । इहोदात्तो नायकः। वीरकरुणभयानकशान्ता रसाः । पर्यायस्वभावोक्ती अलंकारौ ।
तदुक्तम्—'एकस्मिन्यद्यनेकं वा पर्यायः सोऽपि संमतः । अधुना पुलिनं तत्र यत्र स्रोतः
शेराजनि ॥' इति, 'स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनम् । कुरङ्गैरुत्तरङ्गाक्षैः स्तब्ध-
कर्णैरुदीक्षितम् ॥' इति च । शिखरिणी वृत्तम् । तल्लक्षणं तूक्तमेवाधस्तात् ॥

अथ निरुक्तस्वनिर्वेदेन शिष्यमुखं म्लानमिवालक्ष्य तं प्रोत्साहयितुं बकुलान्योक्त्या तद्गुण-
र्णनं ध्वनयति—

**दधानः प्रेमाणं तरुषु समभावेन विपुलं**
**न मालाकारोऽसावकृत करुणां बालबकुले ।**
**अयं तु द्रागुद्यत्कुसुमनिकराणां परिमलै-**
**र्दिगन्तानातेने मधुपकुलझङ्कारभरितान् ॥ ३१ ॥**

दधान इति । तरुषु समभावेन समानदृष्ट्या प्रेमाणं दधानोऽत एवासौ मालाकारो यद्यपि बालबकुले नूतनबकुलद्रुमे विपुलां करुणां नाकृत नैव चकार । तथापि तु पुनरयं द्राक्शी-
घ्रम् । 'द्राङ्मङ्क्षु सपदि द्रुतम्' इत्यमरः । उद्यदिति । आविर्भवत्पुष्पगुच्छानां परिमलैः सुगन्धैर्दिगन्तान् । मधुपेति । पुष्पंधयनिचयगुञ्जारवपूरितानेतादृशानातेने विस्तारयामासेति
संबन्धः । इह ललितो नायकः । वीर एव रसः । असंभवोऽप्यलंकारः । तदुक्तम्—'असं-
भवोऽर्थनिष्पत्तेरसंभाव्यत्ववर्णनम् । को वेद गोपशिशुकः शैलमुत्पाटयेदिति' ॥

तत्राप्येकः काम एव तव शत्रुर्जेतव्य इति ध्वनयति मूलमित्यादि वृक्षपतन्योक्त्या—

**मूलं स्थूलमतीव बन्धनदृढं शाखाः शतं मांसला**
**वासो दुर्गमहीधरे तरुपते कुत्रास्ति भीतिस्तव ।**
**एकः किंतु मनागयं जनयति स्वान्ते ममाधिज्वरं**
**ज्वालालीवलयीभवन्नकरुणो दावानलो घस्मरः ॥ ३२ ॥**

हे तरुपते । तरूणां वृक्षाणां पतिः श्रेष्ठस्तत्संबुद्धौ । भो वृक्षराजेत्यर्थः । अत्र तज्जातिविशेषस्याकथनात्तच्छद्मनापदेश्ये अद्यावध्युत्तमत्वादिजात्यनिर्णयादप्रौढत्वं व्यज्यते । यतस्तव मूलमतीवात्यन्तमेव स्थूलं महत्तरम् । तथा बन्धनदृढं बन्धनं भूमेरन्तर्गते महापाषाणादौ वेष्टनं तेन दृढमचलं चास्तीत्यर्थः । एतेन चक्रवातादिभीत्यपनुतिः सूचिता । एवं शाखाः स्कन्धत्वेन प्रसिद्धास्ताः शतं नतु स्वल्पाः । तत्रापि मांसला लक्षणया पल्लवपरिपुष्टा नतु शुष्काः । एतादृश्यः सन्तीति यावत् । न चैवमपि

राजमार्गनिष्ठत्वेन मे छेदनादि भयमस्त्येवेति वाच्यम् । तव पर्वतदुर्गनिष्ठत्वादित्याह—वास इति । दुर्गो दुःखेन गन्तुं शक्यः दुर्गः । स चासौ महीधरः पर्वतस्तस्मिन्वासोऽपि भवतीत्यतो हेतोस्तव भीतिः कुत्रास्ति । न क्वापि भयं संभवतीत्यर्थः । किंत्वेकोऽयं दावानलो दावाग्निर्मम स्वान्तेऽन्तःकरणे मनागीषदाधिज्वरम् । 'पुंस्याधिर्मानसी व्यथा' इत्यमरादाधिर्मानसी व्यथा । तया ज्वरः संतापस्तं जनयति । संपादयतीत्यर्थः । तत्र हेतुं वदंस्तं विशिनष्टि—ज्वालेत्यादिचरमपादगतविशेषणाभ्याम् । कीदृशः । अकरुणो निर्दयः । पुनः कीदृशः । ज्वालेति । ज्वालानामर्चिषामावलिः पङ्क्तिस्तया वलयीभवन्कटकाकारीभवन्सन् । घस्मरः । बहुभक्षक इति यावत् । 'भक्षको घस्मरोऽद्मर' इत्यमरः । एतेन तत्र स्वभीतिहेतुसामग्री द्योतिता । तस्मादेतस्मात्त्वया भेतव्यमेवेति भावः । पक्षे तरव एव पतयः फलादिप्रदानेन पालयितारो यस्य तत्संबुद्धौ । अत एव तव वासो दुर्गमहीधर इति संगतम् । एतेनारण्यविहारित्वेन विरक्तत्वं सूचितम् । यतस्तव मूलम् 'ऊर्ध्वमूलम्—' इति स्मृतेरधिष्ठानीभूतं ब्रह्म स्थूलमतीव परममहत्परिमाणम् । परिच्छेदत्रयशून्यमेवास्तीत्यर्थः । कीदृशं तत् । बन्धनेति । बन्धने संसारबन्धने त्वदृशानुभूतेऽपि दृढम् । अविनाशीति यावत् । एवं ज्ञाने सामग्री केत्यत्राह—शाखा इति । तैत्तिरीयादिरूपा इत्यर्थः । दावानलपदादौ गौणी लक्षणा । तेन लुप्तोपमा । एतेन दावानलो यथा वनस्थवृक्षयोरेवान्योन्यसंघर्षादुत्पन्नस्तद्दाहकोऽन्यदाहकश्च भवति, तद्वद्भवारण्ये स्त्रीपुंसयोः परस्परसंनिकर्षतः प्रादुर्भूतः कामोऽपि तद्घातकः श्रवणादिनान्यघातकश्चेति व्यक्तम् । एतादृशः । अघेति छेदः । अघहेतुः परस्त्रीविषयकत्वेन पापकारणीभूतो यः स्मरः कामः स तथेत्यर्थः । शेषं तूक्तार्थम् । तस्मात् 'जहि शत्रुं महाबाहो कामरूपं दुरासदम्' इति स्मृतेः काम एव जेय इत्याशयः । अत्र विरक्तो नायकः । शान्तो रसः । श्लेषोऽप्यलंकारः ॥

एवं गुरुवाक्यमाकर्ण्य भवत्प्रतापाग्रे कोऽयं मशकः कामो यन्मामेवैतज्जयः कर्तव्यतयोपदिश्यते श्रीमद्भिर्मम त्वेतत्प्राणान्तसंकटमेव परिस्फुरत्यतः स्वप्रभावादेवायमुपशमनीय इति मेघान्योक्त्या व्यनक्ति—

**ग्रीष्मे भीष्मतरैः करैर्दिनकृता दग्धोऽपि यश्चातक-**
**स्त्वां ध्यायन्घन वासरान्कथमपि द्राघीयसो नीतवान् ।**
**दैवाल्लोचनगोचरेण भवता तस्मिन्निदानीं यदि**
**स्वीचक्रे करकानिपातनकृपा तत्कं प्रति ब्रूमहे ॥ ३३ ॥**

ग्रीष्म इति । अत एव । भीष्मेति । 'दारुणं भीषणं भीष्मं घोरं भीमं भयानकम्' इत्यमरादतिभयंकरैरित्यर्थः । एतादृशैः करैः किरणैः कृत्वा दिनकृता दिवाकरेण कर्त्रा दग्धोऽपि दाहवत्प्राणान्तसंतापितोऽपीत्यर्थः । एतादृशोऽपि यश्चातकः । हे घन, त्वां ध्यायन्मनसा जीवनदातृत्वेन चिन्तयन्सन् द्राघीयसोऽतिशयेन दीर्घा इति द्राघीयांसस्तान् । ग्रीष्मतौ

दिवसविस्तीर्णत्वं प्रसिद्धमेव । एतादृशानपि । एतेन परमासह्यत्वं व्यज्यते । वासराद्दिवसान्कथमपि येनकेनाप्यनिर्वाच्यप्रकारेणापि नीतवाननयदिति संबन्धः । लोचनेति । नेत्रविषयीभूतेन । प्रत्यक्षेणेत्यर्थः । एतादृशेन भवता त्वया । तस्मिन्नुक्तरूपे चातके । करकेति । 'वर्षोपलस्तु करका' इत्यमरात्पाषाणाकारवारिपरिणामविशेषा एव करकास्तासां निपातनं तद्रूपा या कृपा सा यदीदानीं स्वीचक्रेऽङ्गीकृता तर्त्तर्हि कं प्रति ब्रूमह इत्यन्वयः । तस्मादतुलश्रद्धालुरनन्यगतिकश्च मादृशो भक्तजनः कदापि नैवोपेक्षणीयः किं तु स्वसामर्थ्यलेशेनैव कामादिविघ्नसहस्रतोऽप्यमृतप्रदानेन संरक्षणीय एवेति भावः । अत्र दग्धोऽपीत्यनेन श्रद्धातिशयः सूचितः । एवं दैवादित्यनेनाचार्यदौर्लभ्यं ध्वनितम् । इदानीमित्यनेन स्वाभ्युदयसमये हि वदान्यचक्रवर्तिनां प्रायेण पात्राद्यविचार्यैव वितरणप्रवीणत्वं प्रसिद्धं किमुत निजैकजीवने परमसुजने तत्प्रकटीकरणमिति द्योतितम् । अत्र पूज्यतमो नायकः । करुण एव रसः । विषमविशेषोऽलंकारः । तदुक्तं विषमं प्रकृत्य—'अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थसमुद्यमात् । भक्ष्याशया हि मञ्जूषां भङ्क्त्वाखुस्तेन भक्षितः ॥' इति ॥

तत एवं शिष्यवाक्यं श्रुत्वाप्यश्रुतमिव भावयंस्तदुत्तरमविधायैवान्यजनैः सहैव वार्तान्तरासक्तमाचार्यमालक्ष्य स तावत्तस्य तद्वैमुख्यपूर्वकं स्वैकपरायणत्वं संपादयितुं तस्मै निजौत्सुक्यं मेघान्योक्त्यैव व्यनक्ति—

**दवदहनजटालज्वालजालाहतानां**
**परिगलितलतानां म्लायतां भूरुहाणाम् ।**
**अयि जलधर शैलश्रेणिशृङ्गेषु तोयं**
**वितरसि बहु कोऽयं श्रीमदस्तावकीनः ॥ ३४ ॥**

दवेति । अयि जलधर । इदं हि कोमलामन्त्रणे स्वकारुण्योत्पादनार्थम् । भो जलपदवाच्यानाममृतानां जीवनानां च धारक मेघेत्यर्थः । एतेनाखिलपुरुषार्थदानदक्षत्वं द्योतितम् । त्वम् । दवदहनेति । 'दवदावौ वनारण्यवह्नी' इत्यमराद्वनस्यारण्यस्य संबन्धी यो दहनो वह्निस्तस्य जटाला जटा इव येन दीर्घतरा अंशविशेषास्तद्विशिष्टा ये ज्वालाः । 'वह्नेर्द्वयोर्ज्वालकीलौ' इत्यमरः । तेषां जालानि तैरासमन्ताद्धतास्ताडिताः । त्वगादौ दग्धा इति यावत् । तेषामित्यर्थः । अत एव । परिगलितेति । च्युतलतानामत एव म्लायतां म्लायन्ति ग्लानिं प्राप्नुवन्ति ते म्लायन्तस्तेषाम् । म्लानानामित्यर्थः । एतादृशां भूरुहाणाम् । 'वृक्षो महीरुहः शाखी' इत्यमराद्वृक्षाणामिति यावत् । 'षष्ठी चानादरे' इति षष्ठी । ताननादृत्येत्यर्थः । शैलेति । पर्वतशिखरेषु तोयं जलं बहु विपुलं वितरसि वर्षसि । पर्वतेषु हि भूयसी वृष्टिर्भवतीति प्रसिद्धमेव । अयं निरुक्तस्तावकीनस्त्वदीयः श्रीमदः संपदुन्मादः कः । आक्षेपार्थकोऽयं किंशब्दः । अनुचित एवेत्यर्थः । तस्मादस्मास्वेवामृतवृष्टिः पात्रतया कार्येति तात्पर्यम् । इह स्थूललक्ष्यो नायकः । करुणो रसः । परिकरोऽप्यलंकारः । मालिनी वृत्तम् । तल्लक्षणं तूक्तमधस्तात् ॥

इत्थं शिष्यवचनं श्रुत्वा श्रीगुरुस्तमाश्वासयति शृण्वन्निति पान्थान्योक्त्या—

**शृण्वन्पुरः परुषगर्जितमस्य हन्त**
**रे पान्थ विह्वलमना न मनागपि स्याः।**
**विश्वार्तिवारणसमर्पितजीवनोऽयं**
**नाकर्णितः किमु सखे भवताम्बुवाहः॥ ३५॥**

रे इति नीचसंबोधने। तेन निरुक्ताक्षेपस्त्वयानुचित एव विरचित इति सूचितम्। पान्थ पथिक। पक्षे हितजिज्ञासुत्वेन भो सन्मार्गगामिन्नित्यर्थः। त्वमस्य प्रकृतस्य मेघस्य पक्षे गुरोर्मम। पुरोऽग्रभागे। परुषेति। परुषं भयंकरम्। पक्षे त्वय्यौदास्यमिव विधायान्य प्रत्युक्तत्वेन दुःसहं च तद्गर्जितं स्तनितम्। पक्ष उच्चैर्भाषितं शृण्वन्सन्मनागपि ईषदपि विह्वलमना विकलान्तःकरणो न स्या मा भवेत्यन्वयः। तत्र हेतुः। विश्वेति। हे सखे, भवता एतेन सांत्वनं व्यज्यते। विश्वेति। विश्वस्य सर्वस्यार्तिः पीडा तस्या वारणं दूरीकरणं तदर्थं समर्पितं जीवनमुदकम्। पक्षे प्राणधारणं येन स तथेत्यर्थः। परोपकारैकतत्पर इति यावत्। एतादृशोऽयं प्रत्यक्षोऽम्बुवाहो वारिदः। पक्षेऽम्बुशब्दवाच्यममृतपदश्लिष्टं कैवल्यं वहति ब्रह्मात्मबोधपर्यन्तोपदेशेन निर्वहतीति तथा श्रीगुरुरित्यर्थः। नाकर्णितः किमु प्रथितमहिमत्वान्न श्रुतः किम्। अपि तु श्रुत एवेति योजना। तस्मादयुक्त एवायं त्वदाक्षेप इति भावः। इह संबोध्यो नायकः। शान्तो रसः। श्लेषः काव्यलिङ्गं चालंकारः। वसन्ततिलका वृत्तम्। तल्लक्षणं प्रागेवोक्तम्॥

एवमाश्वास्य चतुर्विधान्यतमपुमर्थार्थिनापि दुःसङ्गस्त्याज्य एवेति रहस्यं सूचयति चन्दनान्योक्त्या—

**सौरभ्यं भुवनत्रयेऽपि विदितं शैत्यं तु लोकोत्तरं**
**कीर्तिः किं च दिगङ्गनाङ्गणगता किं त्वेतदेकं शृणु।**
**सर्वानेव गुणानियं निगिरति श्रीखण्ड ते सुन्दरा-**
**नुज्झन्ती खलु कोटरेषु गरलज्वालां द्विजिह्वावली॥३६॥**

सौरभ्यमिति। हे श्रीखण्ड श्रीः खण्डेषु यस्य तत्संबुद्धौ। चन्दनस्य हि यादृशी काष्ठखण्डदशावच्छेदेन सौरभ्यशोभोपलभ्यते न तादृग्द्रुमादिदशावच्छेदेनेति सुप्रसिद्धमेव। अतो युक्तैवोक्तव्युत्पत्तिः। अयि चन्दनेत्यर्थः। तव सौरभ्यं सौगन्ध्यम्। भुवनेति। लोकत्रयेऽपि विदितं सर्वमान्यतया प्रख्यातम्। वर्तत इति यावत्। तथा शैत्यं तु संतापोपशामकत्वं तु लोकोत्तरमलौकिकमेव। अस्तीत्यर्थः। किंच तव कीर्तिर्दाहादावपि परिमलपौष्कल्यख्यातिः। दिगिति। प्राच्यादिचपलविलोचनाजिरसंचारिणीत्यर्थः। भवतीति शेषः। किं तत इति चेत्तदाह—किं त्वित्यादि। तदेव स्फुटयति—इयं प्रत्यक्षा द्विजिह्वावलिः सर्पराजिस्तव कोटरेष्वनायाससंपन्नत्वात्काष्ठबिलेष्वित्यर्थः। गरलज्वालां गरलानि वान्तविषाणि तैर्या

